# तदेवौषधमित्यादौ
# सजातीये ऽपि दर्शनात् ।

ति । ननु सजातीये सो ऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह । तदेवेति । यदौषधं मया कृतं तदौषधमन्येनापि कृ-

---

च तारत्वमन्दत्वरूपविरुद्धधर्माध्यासो बाधकः प्रत्यभिज्ञानबलेन तस्य नित्यत्वसिद्धौ तारत्वादेर्व्यञ्जकवायुधर्मत्वस्य कल्पनात् श्रोत्रेण वायुधर्मस्य तारत्वादेरपि ग्रहणसम्भवात् । य एव तारः स एवान्यापेक्षया मन्द इति प्रतीतेस्तारत्वमन्दत्वयोरविरोधाच्चेत्याहुः । तन्न तथा सति कत्वगत्वादेरपि व्यञ्जकवायुधर्मत्वापत्त्या ककारगकारयोरपि भेदो न सिद्ध्येदिति वर्णैक्यापत्तेः । वस्तुतस्तु वर्णानित्यत्वपक्षे कण्ठताल्वाद्यभिघातानां कत्वादिकं कार्यतावच्छेदकं वर्णनित्यतापक्षे तु कसाक्षात्कारत्वमिति गौरवात् । नच नित्यत्वमतेपि लौकिकविषयितया कत्वमेव तज्जन्यतावच्छेदकमिति न गौरवावकाश इति वाच्यं कोलाहलप्रत्यक्षस्यासङ्ग्रहप्रसङ्गात् न हि कोलाहलप्रत्यक्षं कत्वादिविषयकम् अन्यथा तुल्ययुक्त्या घटाद्युत्पादकस्यापि घटप्रत्यक्षत्वमेव कार्यतावच्छेदकमिति तदपि नित्यमेव स्यादिति । नचानित्यत्वमते प्रत्यभिज्ञायास्तज्जातीयत्वविषयकत्वेन तज्जातीयोयमिति स्यान्न तु सोयमितीति वाच्यं यत्र प्रत्यभिज्ञायां जातित्वेन गत्वादेर्भानं तत्रैव तज्जातीयोयमित्याकारः यत्र तु स्वरूपतो भानं तत्र सोयमित्याकार इत्यभ्युपगमादिति । अत्रेदं बोध्यम् । शब्दो द्विविधः ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मकसंयोगजन्याद्यशब्दं प्रति गगनं समवायिकारणं भेर्याकाशसंयोगो ऽसमवायिकारणं भेरीदण्डसंयोगादिर्निमित्तकारणम् । विभागजन्यध्वन्यात्मकाद्यशब्दं प्रति तु वंशदलाकाशविभागो ऽसमवायिकारणं वंशदलद्वयविभागो निमित्तकारणम् । वर्णात्मकाद्यशब्दं प्रति तु कण्ठताल्वादिनाकाशसंयोगो ऽसमवायिकारणं कण्ठताल्वादिना वाय्वादिसंयोगो निमित्तकारणम् । द्वितीयादिशब्दं प्रति तु आद्यशब्दो ऽसमवायिकारणम् ।

# तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८॥

# इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता ॥

त्तमित्यादिदर्शनादिति भावः ।

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यपुत्र श्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् । समाप्तश्चायं ग्रन्थः ॥

न च भेर्याकाशसंयोगकण्ठाद्याकाशसंयोगादीनां शब्दं प्रति कारणत्वे मानाभाव इति वाच्यम् भावकार्यस्यासमवायिकारणजन्यत्वनियमेन तत्कारणत्वस्वीकारात् । तादृशनियमे मानाभावे तु मास्तु तेषां कारणत्वं भेरीदण्डसंयोगादिनिमित्तकारणसहकृतेनाकाशेनैव शब्दोत्पत्तिसम्भवादिति । प्रथमादिशब्दानां च स्वकार्यशब्देनैव नाशः चरमस्य तूपान्त्यशब्देनोपान्त्यशब्दनाशेन वा नाश इति । मूले तदेवौषधमित्यादिना सैवेयं दीपकलिकेत्यादेः परिग्रहः । ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रकाशयति यदौषधं मया कृतमित्यादिना । अत्र च स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासायितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः किं तु तत्सजातीयाभेदो विषय इति भावः । भानुं प्रणम्य परिभाव्य च शास्त्रसारं मुक्तावलीकिरण एष पितृप्रदिष्टः । सदुक्तिभिर्दिनकरेण करेण सोऽयं नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु ॥ मुक्तावलीप्रकाशो यः स्वाज्ञानतिमिरापहः । तेन सन्तोषमायातु नीलकण्ठः सतीप्रियः ॥ इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टतनूजश्रीमद्दिनकरभट्टविरचिते न्यायसिद्धान्तमुक्तावलीप्रकाशे गुणनिरूपणम् ॥

समाप्तश्चायं ग्रन्थः ॥

# विज्ञापन ।

जिस महाशय को यह पुस्तक अपेक्षित हो काशी में कचौरीगली मे कुंजगली के पश्चिम फाटकपर गोवर्धनरामसाव रामलालसाव के दुकान से मंगालेवें ।